विजानन्विद्वान्वाक्यार्थज्ञानमात्रेण न भवते न भवतीत्येतत् । किं ? अतिवादी अतीत्य सर्वानन्यान्वदितुं शीलमस्येत्यतिवादी । यस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विद्वान् सोऽतिवादी स न भवतीत्यर्थः । सर्वं यदात्मैव नान्यदस्तीति दृष्टं, तदा किं ह्यसावतीत्य वदेत् । यस्य त्वपरं अन्यदृष्टमस्ति स तदतीत्य वदति । अयं तु विद्वानात्मनोऽन्यन्न पश्यति, नान्यच्छृणोति, नान्यद्विजानाति । अतो नातिवदति । किंच आत्मक्रीड आत्मन्येव क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः । तथा आत्मरतिः आत्मन्येव च रती रमणं प्रीतिर्यस्य स आत्मरतिः । क्रीडा बाह्यसाधनसापेक्षा । रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः । तथा क्रियावाञ्ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् । समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यत इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । केचित्तु अग्निहोत्रादिकर्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति । तच्चैष ब्रह्मविदां वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रियावान् आत्मक्रीड आत्मरतिश्च भवितुं शक्तः । कश्चित्कचिद्बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति, बाह्यक्रियात्मक्रीडयोर्विरोधात् । नहि तमःप्रकाशयोर्युगपदेकत्र स्थितिः संभवति । तस्मादसत्प्रलपितमेवैतदनेन ज्ञानकर्मसमुच्चयप्रतिपादनम् । 'अन्या वाचो विमुंचथ' 'संन्यासयोगात्' इत्यादिश्रुतिभ्यश्च । तस्मादयमेवेह क्रियावान्यो ज्ञानध्यानादिक्रियावान्सोऽभिन्नार्थमर्यादः संन्यासी । य एवंलक्षणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान्ब्रह्मनिष्ठः स ब्रह्मविदां सर्वेषां वरिष्ठः प्रधानः ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अंतःशरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ॥५॥

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि । सत्येन अनृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः । किंच, तपसा हीन्द्रियमनएकाग्रतया । "मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात् । तद्ध्यनुकूलं आत्मदर्शनाभिमुखीभावात्परमं साधनं तपो नेतरच्चांद्रायणादि । एष आत्मा लभ्य इत्यनुषंगः सर्वत्र । सम्यग्ज्ञानेन

यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचारेण । नित्यं सर्वदा, नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्यः । वक्ष्यति च— 'न येषु जिह्ममनृतं न माया च' इति । क्व असावात्मा य एतैः साधनैर्लभ्य इत्युच्यते । अंतःशरीरेऽन्तर्मध्ये शरीरस्य पुंडरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धो यमात्मानं पश्यन्त्युपलभन्ते यतयो यतनशीलाः संन्यासिनः क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः, स आत्मा नित्यं सत्यादिसाधनैः संन्यासिभिर्लभ्यत इत्यर्थः । न कादाचित्कैः सत्यादिभिर्लभ्यते । सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः ॥

सत्यमेव जयति नानृतं सत्येन पंथा विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥६॥

सत्यमेव सत्यवानेव जयति नानृतं नानृतवादीत्यर्थः । नहि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोर्जयः पराजयो वा संभवति । प्रसिद्धं लोके सत्यवादिनानृतवाद्यभिभूयते न विपर्ययः, अतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किंच, शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम्? सत्येन यथाभूतवादव्यवस्थया पंथा देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः । येन पथा ह्याक्रमन्ति आक्रमन्ते ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहंकारदंभानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिंस्तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य संबंधि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयत इति निधानं वर्तते । तत्र च येन पथा आक्रमन्ति स सत्येन वितत इति पूर्वेण संबंधः ॥

बृहच्च तद्दिव्यमचिंत्यरूपं
सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहांतिके च
पश्यत्स्विहैव निहितं गुहायाम् ॥७॥

किं तत्किंधर्मकं च तदित्युच्यते— बृहन्महच्च तत्प्रकृतं ब्रह्म सत्यादिसाधनं सर्वतोव्याप्तत्वात् । दिव्यं स्वयंप्रभमनिंद्रियगोचरं अत एव न चिंतयितुं शक्यतेऽस्य रूपमित्यचिंत्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरं, निरतिशयं हि सौक्ष्म्यमस्य सर्वकारणत्वात् । विभाति विविधमादित्यचंद्राद्याकारेण भाति दीप्यते । किंच, दूराद्विप्रकृष्टदेशात्सुदूरे विप्रकृष्टतरे देशे वर्ततेऽविदुषामत्यंताग-

म्यत्वात्तद्ब्रह्म । इह देहे अंतिके समीपे च विदुषामात्मत्वात् । सर्वान्तरत्वाच्चाकाशस्याप्यंतरश्रुतेः । इह पश्यत्सु चेतनावत्स्वित्येतन्निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम् । क्व ? गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं लक्ष्यते विद्वद्भिः । तथाप्यविद्यया संवृतं सन्न लक्ष्यते तत्रस्थमेवाविद्वद्भिः ॥

न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥८॥

पुनरप्यसाधारणं तदुपलब्धिसाधनमुच्यते— यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचाऽनभिधेयत्वान्न चान्यैर्देवैरितरेंद्रियैः । तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह— ज्ञानप्रसादेन आत्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितं प्रसन्नमशुद्धं सन्नावबोधयति नित्यं संनिहितमप्यात्मतत्त्वं मलावनद्धमिव आदर्शम् । विलुलितमिव सलिलम् । तद्यदा इंद्रियविषयसंसर्गजनितरागादिमलकालुष्यापनयनात् आदर्शसलिलादिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते, तदा ज्ञानस्य प्रसादः स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्वो विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात् ततस्तस्मात्तु तमात्मानं पश्यते पश्यत्युपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः सत्यादिसाधनवानुपसंहृतकरणः एकाग्रेण मनसा ध्यायमानश्चिंतयन् ॥

एषोऽणुरात्मा चेतसा वेदितव्यो
यस्मिन्प्राणः पंचधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा ॥९॥

यमात्मानमेवं पश्यति, एषोऽणुः सूक्ष्मः आत्मा चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः । क्वासौ ? यस्मिञ्छरीरे प्राणो वायुः पंचधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टः, तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः । कीदृशेन चेतसा वेदितव्य इत्याह— प्राणैः सहेन्द्रियैश्चित्तं सर्वमंतःकरणं प्रजानामोतं

व्याप्तं येन क्षीरमिव स्नेहेन, काष्ठमिवाग्निना। सर्वं हि प्रजानामंतःकरणं चेतनावत्प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा विशेषेण स्वेनात्मना विभवति आत्मानं प्रकाशयतीत्यर्थः ॥

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान्।
तं तं लोकं जयते तांश्च कामां-
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥१०॥

इति तृतीयमुंडके प्रथमः खंडः ॥

य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह— यं यं लोकं पित्रादिलक्षणं मनसा संविभाति संकल्पयति मह्यमन्यस्मै वा भवेदिति, विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलांतःकरणः कामयते यांश्च कामान्प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान्संकल्पितान्भोगान्। तस्माद्विदुषः सत्यसंकल्पत्वादात्मज्ञं आत्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत्पूजयेत्पादप्रक्षालनशुश्रूषानमस्कारादिभिः भूतिकामो विभूतिमिच्छुः। ततः पूजार्ह एवासौ ॥ इति तृतीयमुंडके प्रथमः खंडः ॥

---

## तृतीयमुंडके द्वितीयः खंडः।

स वेदैतत्परमं ब्रह्म धाम
यत्र विश्वं निहितं भाति शुभ्रम्।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥१॥

यस्मात्स वेद जानातीत्येतद्यथोक्तलक्षणं ब्रह्म परमं प्रकृष्टं धाम सर्वकामानामाश्रयमास्पदं, यत्र यस्मिन्ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं, यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धम्। तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव देवं, ते शुक्रं नृबीजं यदेतत्प्रसिद्धं शरीरोपादानकारणं अतिवर्तन्त्यगच्छन्ति धीरा धीमन्तो, न पुनर्योनिं प्रसर्पन्ति "न पुनः क्वचिद्रतिं करोति" इतिश्रुतेः। अतस्तं पूजयेदित्यभिप्रायः ॥

कामान्यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामाः ॥२॥

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति । कामान्यो दृष्टादृष्टेष्टविषयान्कामयते मन्यमानस्तद्गुणांश्चिंतयानः प्रार्थयते, स तैः कामभिः कामैर्धर्माधर्मप्रवृत्तिहेतुभिः विषयेच्छारूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्तिनिमित्तं कामाः कर्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैः वेष्टितो जायते । यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकामः आत्मकामत्वेन परि समंतत आप्ताः कामा यस्य, तस्य पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य, तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति प्रविलीयन्ते विलयमुपयान्ति नश्यन्तीत्यर्थः । कामाः तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः ॥

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥

यद्येवं सर्वलाभात्परम आत्मलाभः तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्ते इदमुच्यते । योऽयमात्मा व्याख्यातो, यस्य लाभः परः पुरुषार्थो, नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः । तथा न मेधया ग्रंथार्थधारणशक्त्या । न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः । केन तर्हि लभ्य इत्युच्यते— यमेव परमात्मानमेवैष विद्वान्वृणुते प्राप्तुमिच्छति तेन वरणेनैष परमात्मा लभ्यो नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते— तस्यैष आत्मा अविद्यासंछन्नां स्वां परां तनुं स्वात्मतत्त्वं स्वरूपं विवृणुते प्रकाशयति, प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः । तस्मादन्यत्यागेन आत्मलाभप्रार्थनैव आत्मलाभसाधनमित्यर्थः ॥

नायमात्मा बलहीनेन लभ्यो
न च प्रमादात्तपसो वाऽप्यलिंगात् ।

एतैरुपायैर्यतते यस्तु विद्वां-
स्तस्यैष आत्मा विशते ब्रह्म धाम ॥४॥

आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिंगयुक्तानि संन्याससहितानि । यस्मादयमात्मा बलहीनेन बलप्रहीणेन आत्मनिष्ठाजनितवीर्यहीनेन न लभ्यो, नापि लौकिकपुत्रपश्वादिविषयसंगनिमित्तप्रमादात् । तथा तपसो वाऽप्यालिंगाल्लिंगरहितात् । तपोऽत्र ज्ञानम् । लिंगं संन्यासः । संन्यासरहिताज्ज्ञानान्न लभ्यत इत्यर्थः । एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैः यतते तत्परः सन्प्रयतते यस्तु विद्वान्विवेक्यात्मवित् तस्य विदुष एष आत्मा विशते संप्रविशति ब्रह्म धाम ॥

संप्राप्यैनमृषयो ज्ञानतृप्ताः
कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मानः सर्वमेवाविशन्ति ॥५॥

कथं ब्रह्म विशत इत्युच्यते— संप्राप्य समवगम्यैनमात्मानं ऋषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता, न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन । कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः । वीतरागा विगतरागादिदोषाः । प्रशान्ता उपरतेन्द्रियाः । त एवंभूताः सर्वगं सर्वव्यापिनं आकाशवत्सर्वतः सर्वत्र प्राप्य, नोपाधिपरिच्छिन्नेनैकदेशेन । किं तर्हि, तद्ब्रह्मैवाद्वयं आत्मत्वेन प्रतिपद्य धीरा अत्यंतविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति भिन्ने घटे घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहति । एवं ब्रह्मविदो ब्रह्म धाम प्रविशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥६॥

किंच वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः पर आत्मा विज्ञेयः, सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च संन्यासयोगात्सर्वकर्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतयो यतनशीलाः,

शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालास्ते अपरांताः तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परांतकालः तस्मिन्परांतकाले साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवत् दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्मणीत्यर्थः । परामृताः परममृतममरणधर्मकं ब्रह्म आत्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः,परामृताः सन्तः परिमुच्यन्ति परि समंतात्प्रदीपनिर्वाणवत् भिन्नघटाकाशवच्च निवृत्तिमुपयान्ति । परिमुच्यन्ते परि समंतान्मुच्यन्ते सर्वे न देशान्तरं गन्तव्यमपेक्षन्ते । "शकुनीनामिवाकाशे जले वारिचरस्य च । पदं यथा न दृश्येत तथा ज्ञानवतां गतिः ॥" "अनध्वगा अध्वसु पारयिष्णवः" इति श्रुतिस्मृतिभ्याम् । देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्नसाधनसाध्यत्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गंतव्यम् । यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यंतवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् । न त्वेवंविधं ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता । अपि चाविद्यादिसंसारबंधापनयमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्यभूतम् ॥

गताः कलाः पंचदश प्रतिष्ठा
देवाश्च सर्वे प्रति देवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ॥७॥

किंच मोक्षकाले या देहारंभिकाः कलाः प्राणाद्याः ताः स्वां स्वां प्रतिष्ठां गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति द्वितीयाबहुवचनम् । पंचदश पंचदशसंख्याका या अंत्यप्रश्नपरिपठिताः प्रसिद्धा, देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः सर्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः । यानि च मुमुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीयमाणत्वात् । विज्ञानमयश्चात्मा अविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्यादिप्रतिबिंबवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनात्मना । अतो विज्ञानमयो विज्ञानप्रायः । त एते कर्माणि विज्ञानमयश्चात्मा उपाध्यपनये सति परेऽव्ययेऽनंतेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनंतरेऽ-

ब्राह्येऽव्यये शिवे शान्ते सर्वे एकीभवन्ति अविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव सूर्यादिप्रतिबिंबाः सूर्ये घटाद्यपनय इवाकाशे घटाद्याकाशाः ॥

यथा नद्यः स्यंदमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ॥८॥

किंच यथा नद्यो गंगाद्याः स्यंदमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तं अदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति, नाम च रूपं च नामरूपे विहाय हित्वा, तथा अविद्याकृतनामरूपाद्विमुक्तः सन्विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥

स यो ह वै तत्परमं ब्रह्म वेद
ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति।
तरति शोकं तरति पाप्मानं
गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवति ॥९॥

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धाः। अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविद्प्यन्यां गतिं मृतो गच्छति न ब्रह्मैव। न। विद्ययैव सर्वप्रतिबंधस्यापनीतत्वात्। अविद्याप्रतिबंधमात्रो हि मोक्षो नान्यप्रतिबंधः। नित्यत्वादात्मभूतत्वाच्च। तस्मात्स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति जानाति स नान्यां गतिं गच्छति। देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम्। आत्मा ह्येषां स भवति। तस्माद्ब्रह्म विद्वान् ब्रह्मैव भवति। किंच नास्य विदुषोऽब्रह्मवित्कुले भवति। किंच तरति शोकं अनेकेष्टवैकल्यनिमित्तं मानसं संतापं जीवन्नेवातिक्रान्तो भवति। तरति पाप्मानं धर्माधर्माख्यं गुहाग्रंथिभ्यो हृदयाविद्याग्रंथिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव 'भिद्यते हृदयग्रंथिः' इत्यादि ॥

तदेतदृचाऽभ्युक्तम्—

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः
स्वयं जुह्वत एकर्षिं श्रद्धयन्तः।
तेषामेवैतां ब्रह्मविद्यां वदेत

शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥

अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते । तदेतद्विद्यासंप्रदानविधानमृचा मंत्रेणाभ्युक्तमभिप्रकाशितम् । क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः । श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्याभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिं एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्धधानाः सन्तो ये, तेषां एव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम् । यथा आथर्वणानां वेदव्रतं प्रसिद्धम् । यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव वदेत ॥

तदेतत्सत्यमृषिरंगिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।
नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥

इति तृतीयमुंडके द्वितीयः खंडः ॥

ॐ भद्रं कर्णेभिरिति शान्तिः ।

इत्यथर्ववेदीया मुंडकोपनिषत्समाप्ता ॥

तदेतदक्षरं पुरुषं सत्यं ऋषिरंगिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच । तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः । नैतत् ग्रंथरूपं अचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति । चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति । समाप्ता ब्रह्मविद्या । सा येभ्यो ब्रह्मादिभ्यः पारंपर्यक्रमेण संप्राप्ता तेभ्यो नमः परमऋषिभ्यः । परमं ब्रह्म साक्षात् दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयः तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यादरार्थं मुंडकसमाप्त्यर्थं च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ आथर्वणमुंडकोपनिषद्भाष्यं समाप्तम् ॥

# उपनिषद्भाष्ये प्रमाणतया उदाहृतानां श्रुतिस्मृतीत्यादिवाक्यानां वर्णानुक्रमः ।



ॐकार एवेदं सर्वम् छां. २.२३.३
अकारो वै सर्वा वाक्सैषास्य स्पर्शोतस्थोष्मभिर्व्यज्यमाना वह्वी नानारूपा
अक्षरात्परतः परः मुं. २.१.२
अगृह्यो न हि गृह्यते बृ.४.२.४
अग्निर्मूर्धा चक्षुषी चंद्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः मुं. २.१.१४
अग्निर्वै होता
अचक्षुष्कमश्रोत्रमवागमनः बृ. ३.८.८
अजायमानो बहुधा विजायते
अत्याश्रमिभ्यः परमं पवित्रं श्वे. ६.२१
अत्र ब्रह्म समश्नुते कठ. ६.१४; बृ. ४.४.७
अत्रायं पुरुषः स्वयंज्योतिर्भवति बृ. ४.३.९
अत्रैष देवः स्वप्नान्न पश्यत्यथ यदैतस्मिञ्छरीरे सुखं भवति प्र. ४.६
अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्यया
अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य छां.८.३.४
अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते छां.१.७.५
अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते छां. १.६.६
अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिः छां. ८.६.५
अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः छां. ३.१३.७
अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म छां.८.१.१
अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेव छां. ४.१५.५
अथान्नस्याथै द्रष्टा छां. ७.९.१
अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि छां.५.१०.८
अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्य प्रश्न. १.१०
अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मंताऽविज्ञातो विज्ञाता बृ. ३.७.२३

अनध्वगा अध्वसु पारयिष्णवः
अनंतं वै मनोऽनंता विश्वे देवा अनंतमेव स तेन लोकं जयति बृ. ३.१.९
अनंतमपारम् बृ. २.४.१२
अनंतरमबाह्यं बृ. २.५.१९; ३.८.८
अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा बृ. ४.३.२२
अनन्वागतस्तेन भवत्यसंगो ह्ययं पुरुषः बृ. ४.३.१५
अनश्नन्नन्योऽभिचाकशीति मुं. ३.१.१
अनिरुक्तेऽनिलयने तै. २.७
अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि छां. ६.३.२
अन्नं दाम
अन्योऽतर आत्मानंदमयः तै. २.५
अन्योऽन्तर आत्मा मनोमयः तै. २.३
अन्योऽतर आत्मा विज्ञानमयः तै. २.४
अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः बृ. १.४.१०
अपागादग्नेरग्नित्वं छां. ६.४.१
अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः श्वे. ३.१९
अभयं वै जनक प्राप्तोऽसि बृ. ४.२.४
अमृतत्वं हि विंदते केन. २.४
अयमग्निर्वैश्वानरो योऽयमंतः पुरुषे येनेदमन्नं पच्यते बृ. ५.९
अयमात्मा ब्रह्म सर्वानुभूः बृ. २.५.१९
अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं बृ.४.३.२१
अयं वै यज्ञो योऽयं पवते
अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढः बृ. ४.३.३५
अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः बृ. २.२.३
अविकार्योऽयमुच्यते गी. २.२५
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् गी. १३.१६
अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः छां. ८.१२.१
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्। अश्वमे- मभा. आ. ७४.१०२

असक्तं सर्वभृत् गी. १३.१४
असंगो न हि सज्यते बृ. ३.९.२६
असंगो ह्ययं पुरुषः बृ. ४.३.१५
असदेवेदमग्र आसीत्ततसदासीत्तत्समभवत् छां.३.१९.१
असद्वा इदमग्र आसीत्ततो वै सदजायत तै. २.७
असौ वा आदित्यो देवमधु छां. ३.१.१
अस्थूलमनणु बृ. ३.८.८
अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः बृ. २.४.१०; ४.५.११
अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह छां. १.९.१
अस्य लोकस्य सर्वावतो मात्रामपादाय बृ. ४.३.९
अहं ब्रह्मास्मि बृ. १.४.१०
अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः छां. ८.१५.१
आकाशवत्सर्वगतश्च नित्यः
आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म छां. ८.१४.१
आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न छां. ६.१४.२
आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति छां. ४.९.३
आत्मत एवेदं सर्वम् छां. ७.२६.१
आत्मतः प्राणः छां. ७.२६.१
आत्मन आकाशः संभूतः तै. २.१
आत्मन एष प्राणो जायते प्रश्न. ३.३
आत्मानि खल्वरे दृष्टे श्रुते मते विज्ञात इदं बृ. ४.५.६
आत्मनैवात्मानं पश्यति बृ. ४.४.२३
आत्मनैवायं ज्योतिषास्ते बृ. ४.३.६
आत्मानमेव लोकमुपासीत बृ. १.४.१५
आत्मा वा अरे द्रष्टव्यः बृ. २.४.५
आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । ऐ. १.१.१
आत्मेत्येवोपासीत बृ. १.४.७
आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः कठ ३.४

आत्मैवाभूद्विजानतः ईश. ७
आत्मैवेदमग्र आसीत् बृ. १.४.१
आत्मैवेदं सर्वं छां. ७.२५.२
आदित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः स छां. ४.१५.५
आदित्यो ब्रह्मेत्यादेशः छां. ३.१९.१
आनंदाद्ध्येव खल्विमानि भूतानि जायन्ते । आनंदेन जातानि तै. ३.६
आनंदो ब्रह्मेति व्यजानात् तै. ३.६
आनंदं ब्रह्मणो विद्वान्न बिभेति कुतश्चन तै. २.९
आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते
इदं वाव तद्यदिदमस्मिन्नंतः पुरुषे ज्योतिः छां. ३.१३.७
इदं सर्वं यदयमात्मा बृ. २.४.६
इंद्रो मायाभिः पुरुरूप ईयते बृ. २.५.१९; ऋ. ६.४७.१८
इंधो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः
इमं मानवमावर्तं नावर्तन्ते छां. ४.१५.६
इमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं छां. ८.३.२
इयं वेदिः परोऽतः पृथिव्याः
उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च
उभे ह्येते साध्यसाधनलक्षणे एषणे एव । बृ. ३.५.१
ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे ऋ. १.१६४.३९
एकमेवाद्वितीयं छां. ६.२.१
एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास छां. ८.११.३
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा श्वे. ६.११
एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः कौ. २.५
एतं त्वेव ते भूयोऽनुव्याख्यास्यामि छां. ८.९.३
एतदमृतमभयमेतद्ब्रह्म छां. ८.११.१
एतमानंदमयमात्मानमुपसंक्रामति तै. २.८
एतमितः प्रेत्याभिसंभवितास्मि छां. ३.१४.४
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इंद्रमेकेऽपरे मनु. १२.१२३

एतं वै तमात्मानं विदित्वा बृ. ३.५.१
एतं संयद्वाम इत्याचक्षते छां. ४.१५.२
एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च बृ. ३.८.११
एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ बृ. ३.८.९
एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवन्ति बृ. ४.३.३२
एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त ऐ. आ. ३.२.३.१२
एतावान्वै कामः बृ. १.४.१७
एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते छां. ४.१५.६
एतेनैवायतनेनैकतरमन्वेति प्रश्न ५.२
एवंविदो ह वा उदेति सूर्य एवंविद्यस्तमेति
एवं सोम्य स आदेशो भवति छां. ६.१.३
एवं हास्य सर्वे पाप्मानः प्रदूयन्ते छां. ५.२४.३
एष नित्यो महिमा ब्राह्मणस्य बृ. ४.४.२३
एष पंथा एतत्कर्मैतद्ब्रह्मैतत्सत्यं
एषोऽस्य परम आनंद एतस्यैवानंदस्यान्यानि भूतानि बृ. ४.३.३२
कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु बृ. ४.३.७
कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते बृ. ३.९.९
कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा छां. १.११.५
कर्ता भोक्ता विज्ञाता नियंता प्रशासिता
कर्मणा बध्यते जंतुर्विद्यया च प्रमुच्यते । तस्मात्कर्म मभा शां. २४०.७
कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै बृ. ३.८.७
कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृति बृ. १.५.३
कामा येऽस्य हृदि श्रिताः । कठ ६.१४
किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः बृ. ४.४.२२
कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः छां. ६.२.२
को न आत्मा किं ब्रह्म छां. ५.११.१
को अद्धा वेद ऋ. १०.१२९.६
को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनंदो न स्यात् तै. २.७

क्रियापथश्चैव पुरस्तात्संन्यासश्च तयोः संन्यास एवात्य० तै.आ.१०.६२.१२
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे मुं. २.२.८
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत गी. १३.३३
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत गी. १३.२
गायत्री वा इदं सर्वं भूतं यदिदं किंच छां. ३.१२.१
गुहाहितं गह्वरेष्ठं पुराणम् कठ. २.१२
गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा जाबा. ४
चक्षुष्यः श्रुतो भवति य एवं वेद छां. ३.१३.८
जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतो मनोऽपेतो कौ. ३.३
जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते छां. ६.११.३
ज्ञाते द्वैतं न विद्यते मां. का. १.१८
ज्ञात्वा नैष्कर्म्यमाचरेत् स्मृ. ?
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । स्मृ. ?
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा गी. ४.३७
ज्यायान्पृथिव्या ज्यायानंतरिक्षाज्ज्यायान्दिवो छां. ३.१४.३ बृ. ३.९.२८
त इमे सत्याः कामाः छां. ८.३.१
त एते सर्व एव समाः सर्वेऽनंताः श्रुतिः?
ततोऽन्यदार्तम् बृ. ३.४.२
ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् । गी. १८.५५
तत्केन कं पश्येत् बृ. २.४.१३
तत्केन कं विजानीयात् बृ. ४.५.१५
तत्तेज ऐक्षत छां. ६.२.३
तत्तेजोऽसृजत छां. ६.२.३
तत्त्वमसि छां. ६.८.७
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ईश. ७
तत्सृष्ट्वा तदेवानुप्राविशत् तै. २.६
तं त्वौपनिषदं पुरुषं पृच्छामि बृ. ३.९.२६
तदपराजिता पूस्तदैरं मदीयं सरः छां. ८.५.३

तदप्येष श्लोको भवति तै. २.६
तदस्येदं वाचा तंत्या नामभिर्दामभिः सर्वं सितम श्रुतिः १
तदात्मानं स्वयमकुरुत तै. २.७
तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् बृ. १.४.१०
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते कठ. ६.१
तदैक्षत तत्तेजोऽसृजत छां. ६.२.३
तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत छां. ६.२.३
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् बृ. ४.४.१६
तद्धेदं तर्ह्यव्याकृतमासीत् बृ. १.४.७
तद्धैक आहुरसदेवेदमग्र आसीत् छां. ६.२.१
तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति बृ. १.४.१०
तद्धर्म्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः स्मृतिः १
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गी. ५.१७
तद्ब्रह्म तदमृतं स आत्मा छां. ८.१४
तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः छां. १.७.६
तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मंडले पुरुषो बृ. ५.५.२
तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता कौ. ३.९
तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं बृ. ४.४.७
तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो छां. ८.१.६
तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् बृ. १.४.१०
तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मंत्रविज्ञातं बृ. ३.८.११
तद्विद्धि प्रणिपातेन गी. ४.३४
तपसा ब्रह्म विजिज्ञासस्व तै. ३.२
तमः श्वभ्रनिभं दृष्टं वर्णबुद्बुदसंनिभम् । नाशप्रायं सुखाद्धीनं व्यासस्मृतिः १
तं मा भगवाञ्छोकस्य पारं तारयतु छां. ७.१.३
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः बृ. ४.४.२१
तमेव विदित्वाऽतिमृत्युमेति श्वे. ३.८; ६.१५
तं यथा यथोपासते तदेव भवति

तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति मुं. ३.१.१
तयोर्ध्वमायन्नमृतत्वमेति छां. ८.६ ६ कठ. ६.१६
तरति शोकमात्मवित् छां. ७.१.३
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः मभा. शां. २४०.७
तस्मात्तत्सर्वमभवत्
तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गंधि च छां. १.२.२
तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः तै. २.१
तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योंऽतर आत्मानंदमयः तै. २.५
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे बृ. ४.४.६
तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः छां.७.२६.२
तस्य भासा सर्वमिदं विभाति कठ.५.१५; श्वे.६.१४; मुं.२.२.१०
तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः छां. ५.१८.२
तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा छां. ३.१२.६
तासां त्रिवृतं त्रिवृतमेकैकां करवाणि छां. ६.३.३
ते क्षय्यलोका भवन्ति छां. ७.२५.२
तेज एव तत्पीतं नयते छां. ६.८.५
ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् श्वे. १.३
तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति बृ. १.५.२३
ते वा एते आहुती हुते उत्क्रामतस्ते अंतरिक्षमाविशतः
तेषां न पुनरावृत्तिः बृ. ६.२.१५
तेषां सर्वेषु लोकेषु कामचारो भवति छां. ७.२५.२; ८.१.६
त्रिपादस्यामृतं दिवि छां. ३.१२.६
त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो श्वे. ४.३
त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि प्रश्न. ६.८
दशाक्षरा विराट्
दहरोऽस्मिन्नंतराकाशः छां. ८.१.१
दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः मुं. २.१.२
दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मंता विज्ञातेर्विज्ञाता बृ. ३.४.२

द्वादश मासाः पंचर्तवस्त्रय इमे लोका असावादित्य एकविंशः
द्वाविमावथ पंथानौ यत्र वेदाः प्रतिष्ठिताः प्रवृत्तिलक्षणो मभा.शां. २४०.६
द्वितीयाद्वै भयं भवति बृ. १.४.२
धर्माविरुद्धो भूतेषु कामोऽस्मि गी. ७.११
ध्यायतीव लेलायतीव बृ. ४.३.७
न कर्मणा वर्धते नो कनीयान् बृ. ४.४.२३
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः कै. २
न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति पदं इति संन्यासशासनं ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः
न तस्य कार्यं करणं च विद्यते न तत्समोऽभ्यधिकश्च श्वे. ६.८
न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति बृ. ४.४.६
न दृष्टेर्द्रष्टारं पश्येः बृ. ३.४.२
न मतेर्मंतारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः बृ. ३.४.२
न येषु जिह्ममनृतं न माया प्र. १.१६
न लिप्यते लोकदुःखेन बाह्यः क. ५.११
न वा अरे पत्युः कामाय... न वा अरे सर्वस्य बृ. ४.५.६
न विज्ञातेर्विज्ञातारं विजानीयाः बृ. ३.४.२
न सत्तन्नासदुच्यते गी. १३.१२
न संदृशे तिष्ठति रूपमस्य कठ. ६.९
न हि द्रष्टुर्दृष्टेः बृ. ४.३.२३
नहि वक्तुर्वक्तेर्विपरिलोपो विद्यते बृ. ४.३.२६
नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् बृ. ४.३.३०
न हिंस्यात्सर्वभूतानि
नाकृतेनेह कश्चन गी. ३.१८
नादत्ते कस्यचित्पापं गी. ५.१५
नान्यदतोऽस्ति विज्ञातृ बृ. ३.८.११
नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता बृ. ३.७.२३
नान्यः पंथा विद्यतेऽयनाय श्वे. ६.१५

नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः बृ. १.६.३
नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति छां. ८.११.२
नाहमत्र भोग्यं पश्यामि छां. ८.९.१
नाहं प्रकाशः सर्वस्य योगमायासमावृतः गी. ७.२५
नित्यं विभुं सर्वगतं मुं. १.१.६
निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम् श्वे. ६.१९
निस्तुतिर्निर्नमस्कारः मां. का. २.३.७
नेति नेति बृ. २.३.६
नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप छां. ४.४.५
नैव तस्य कृतेनार्थः गी. ३.१८
न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा नारा. ७८
न्यास एवात्यरेचयत् तै.आ. १०.६२.१२
पंच ब्रह्मपुरुषाः छां. ३.१३.६
पंचम्यामाहुतावापः पुरुषवाचो भवन्ति छां. ५.३.३
पतिर्जायां प्रविशति
परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन मुं. १.२.१२
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि छां. ३.१२.५
पित्रानुशिष्टोऽहं ब्रह्माहं यज्ञ इत्यादि प्रतिपद्यते
पुण्यो गंधः पृथिव्यां गी. ७.९
पुरुष एवोक्थमयमेव महान्प्रजापतिः
पुरुषो वाव गौतमाग्निः छां. ५.७.१
पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः बृ. ३.९.१०
प्रज्ञानघन एव बृ. ४.५.१३
प्रज्ञानं ब्रह्म ऐ. ५.३
प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्
प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरम् बृ. ४.३.२१
प्राणन्नेव प्राणो नाम भवति बृ. १.४.७
प्राणबंधनं हि सोम्य मनः छां. ६.८.२

प्राणस्य प्राणम् बृ. ४.४.१८
प्राणाग्नय एवैतस्मिन्पुरे जाग्रति प्र. ४.३
प्राणाद्वा एष उदेति प्राणेऽस्तमेति बृ. १.५.२३
प्राणापानपरिचलनवत्या हि वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञः
प्राणा वै सत्यं तेषामेष सत्यम् बृ. २.१.२०; २.३.६
प्राणो वा आशाया भूयान् छां. ७.१५.१
प्राणो वाव संवर्गः छां. ४.३.३
प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा छां. ७.१५.१
प्राणो ह्येवैतान्सर्वान्संवृंक्ते छां. ४.३.३
प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म मुं. १.२.७
बहु स्यां प्रजायेय तै. २.६
बुद्धेरात्मा महान्परः कठ. ३.१०
ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा जा. ४
ब्रह्मचारि धनदायी मेधावी श्रोत्रियः प्रियः । विद्यया वा विद्यां
ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै प्र. १.१
ब्रह्मलोकमभिसंपद्यते छां. ८.१५.१
ब्रह्मवादिनो वदन्ति किं कारणं ब्रह्म श्वे. १.१
ब्रह्मविदाप्नोति परम् तै. २.१
ब्रह्मवृक्षः सनातनः मभा. अश्व. ४७.१४
ब्रह्म वेद ब्रह्मैव भवति मुं. ३.२.९
ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीं मनु. १२.५०
ब्रह्मैव सन्ब्रह्माप्येति बृ. ४.४.६
ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण मुं. २.२.११
ब्रह्मैवेदं सर्वं मुं. २.२.११
भारूपः सत्यसंकल्पः छां. ३.१४.२
भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः मुं. २.२.८
भीषास्माद्वातः पवते भीषोदेति सूर्यः तै. २.८
भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास छां. ७.२३

भूः प्रपद्येऽमुनामुनामुना छां. ३.१५.५
भृगुर्वै वारुणिः वरुणं पितरमुपससार तै. ३.१
मत्तः स्मृतिर्ज्ञानमपोहनं च गी. १५.१५
मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः । स्मृतिः
मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि रूपाणि बृ. ३.९.२०
मनो ब्रह्मेत्युपासीत छां. ३.१८.१
मनोमयः प्राणशरीरो भारूपः छां. ३.१४.२
मंत्रेषु कर्माणि कवयो यान्यपश्यन् मुं. १.२.१
महान्तं विभुमात्मानं कठ. २.२२
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः । यज्ञो दानं तपश्चैव पावनानि
महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः बृ. ३.९.२
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् श्वे. ४.१०
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति कठ. ४.११ बृ. ४.४.१९
मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्या चोदितान्यथा । मां. ३.१५
मोक्षमिच्छन्सदा कर्म त्यजेदेव ससाधनम् त्यजतैव हि तज्ज्ञेयं त्यक्तुः
य आत्मापहतपाप्मा छां. ८.७.१
य आत्मा सर्वांतरः बृ. ३.४.१
य आदित्ये तिष्ठन्नादित्यादंतरो यमादित्यो न वेद यस्यादित्यः बृ. ३.७.९
य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यंतरो यमयति बृ. ३.७.१
य एतामेवं ब्रह्मोपनिषदं वेद छां. ३.११.३
य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात् बृ. २.१.१६
य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा छां. ८.७.४
यज्ञेन दानेन बृ. ४.४.२२
यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । तै. ३.१
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनंदं ब्रह्मणो विद्वान् तै.२.९
यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं मुं. १.१.६
यत्र त्वस्य सर्वमात्मैवाभूत् बृ. २.४.१४; ४.५.१५
यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा छां. ७.२४.१

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं बृ. ४.३.१९ मां. ५
यत्र हि द्वैतमिव भवति तादितर इतरं पश्यति बृ. २.४.१३; ४.५.१५
यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति छां. ६.८.१
यत्साक्षादपरोक्षाद्ब्रह्म बृ. ३.४.१; ३.५.१
यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति छां. ३.१४.१
यथा पृथिव्यामोषधयः संभवन्ति मुं. १.१.७
यथाप्रज्ञं हि संभवाः
यथा सकृद्विद्युतं
यदंतरा पितरं मातरं च बृ. ६.२.२
यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चंद्रमसि गी. १५.१२
यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां तै. २.७
यदेष आकाश आनंदो न स्यात् तै. २.७
यद्गत्वा न निवर्तन्ते गी. १५.६
यद्भूतयोनिं परिपश्यन्ति धीराः मुं. १.१.६
यद्वाव कं तदेव खं यदेव खं तदेव कं छां. ४.१०.५
यद्वै किंच मनुरवदत्तद्भेषजम् तै. सं. २.२.१०.२
यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम्। तं तमेवैति कौंतेय गी. ८.६
यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः बृ. २.५.१
यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते छां. ५.१८.२
यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत प्र. ५.५
यः पृथिव्यां तिष्ठन्पृथिव्या अंतरो यं पृथिवी न वेद यस्य बृ. ३.७.२
यस्माद्भूयो न जायते कठ. ३ ८
यस्य ज्ञानमयं तपः मुं. १.१.९
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः श्वे. ६.२३
यावत्संपातमुषित्वा छां. ५.१०.५
या वाक्पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित्तां वेद ब्राह्मणः
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः मनु. १२.९५
येन सूर्यस्तपति तेजसेद्धः तै. ब्रा. ३.१२.९.७

येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् मुं. १.२.१३
येनावृतं खं च दिवं महीं च
येनेदं सर्वं विजानाति तं केन विजानीयात् बृ. २.४.१३
ये प्रजामीषिरेऽधीरास्ते श्मशानानि भेजिरे । ये प्रजां नेषिरे
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मै श्वे. ६.१८
यो योनिं योनिमधितिष्ठत्येकः श्वे. ४.११
यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः
यो वाचमंतरो यमयति बृ. ३.७.१
यो विज्ञाने तिष्ठन् बृ. ३.७.२२
यो वेद निहितं गुहायां परमे व्योमन् तै. २.१
यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः कौ. ३.३
यो वै भूमा तत्सुखम् छां. ७.२३
यो वै भूमा तदमृतम् छां. ७.२४.१
योषा वाव गौतमाग्निः छां. ५.८.१
योऽसावतींद्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः
रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः बृ. ५.५.२
रसो वै सः रसं ह्येवायं लब्ध्वानंदी भवति तै. २.७
वंध्यापुत्रो न तत्त्वेन मायया वापि जायते । मां. का. ३.२८
वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति तै. १.६.२
वाचारंभणं विकारो नामधेयं छां. ६.१.४
वाचैवायं ज्योतिषास्ते बृ. ४.३.५
वाचो ह वाचश्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः
वात एव यज्ञस्यारंभको वातः प्रतिष्ठा
वायुर्वाव संवर्गः छां. ४.३.१
वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः बृ. ३.७.२
विज्ञातारमरे केन विजानीयात् बृ. २.४.१४
विज्ञानमानंदं ब्रह्म बृ. ३.९.२८
विद्यया तदारोहन्ति

विद्यया देवलोकः कर्मणा पितृलोकः बृ. १.५.१६
विद्यया विंदतेऽमृतम् केन. २.४
विद्यासहायवानीश्वरः स्मृतिः ?
विद्याभीप्सिनं नचिकेतसं मन्ये कठ. २.४
विद्वान्न बिभेति कुतश्चन तै. २.९
विराडन्नं छां. ४.३.८
वीरहा वा एष देवानां योऽग्निमुद्वासयते
वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मना । स्मृतिः
वेदाहमेतं पुरुषं महान्तं श्वे. ३.८
व्युत्थायाथ भिक्षाचर्यं चरन्ति बृ. ४.४.२२
शतं वर्षाणि सर्वमायुः पुरुषस्य
शान्तो दान्तः बृ. ४.४.२३
शुद्धमपापविद्धम् ईश.८
शुनि चैव श्वपाके च गी. ५.१८
शुष्यति वै प्राण ऋतेऽन्नात् बृ. ५.१२.१
शूद्रश्चतुर्थो वर्ण एकजातिः मनु.१०.४
श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्ति
श्रद्धावांल्लभते ज्ञानं तत्परः संयतेंद्रियः । गी. ४.३९
श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगव छां. ७.१३
श्रोतव्यो मंतव्यो निदिध्यासितव्यः बृ. २.४.५
स एतं देवयानं पंथानमासाद्याग्निलोकमागच्छति कौ. १.३
स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत एतमेव पुरुषम् ऐ. ३.१२
स एतस्माज्जीवघनात्परात्परं पुरिशयमीक्षते प्र. ५.५
स एनमविदितो न भुनक्ति बृ. १.४.१५
स एष नेति नेत्यात्मा बृ. ३.९.२६
स एष परोवरीयानुद्गीथः स एषोऽनंतः छां. १.९.२
स एष ये चामुष्मात्परांचो लोकास्तेषां चेष्टे देवकामानां च छां. १.६.८
स एष ये चैतस्मादर्वांचो लोकास्तेषां चेष्टे मनुष्यकामानां च छां. १.७.६

सच्च त्यच्चाभवत् तै. २.६
सता सोम्य तदा संपन्नो भवति छां. ६.८.१
सत्यं ज्ञानमनंतं ब्रह्म तै. २.१
सत्यं त्वेव विजिज्ञासितव्यम् छां. ७.१६; ८.४१
स दाधार पृथिवीं द्यामुतेमां
सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् छां. ६.२.१
सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः छां. ६.८.४
स प्राणमसृजत प्राणाच्छ्रद्धाम् प्र. ६.४
सबाह्याभ्यंतरो ह्यजः मुं. २.१.२
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह मुं. १.१.१
स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोंऽतर्हृदय आकाशः छां. ८.१.३
स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि छां. ७.२४.१
स मनसा वाचं मिथुनं समभवत् बृ. १.२.४
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरं गी. १३.२७
स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा छां. ६.१४.३
स यथा दुंदुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयात् बृ. ४.५.८
स यथा सैंधवघनोऽनंतरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरे बृ. ४.५.१३
स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति मुं. ३.२.९
सर्वकर्मा सर्वकामः सर्वगंधः सर्वरसः छां. ३.१४.२
सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ छां. ३.१४.१
सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति छां. १.११.५
सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते छां. १.९.१
सर्वेभ्योंऽगेभ्यस्तेजः संभूतम् ऐ. ४.१
स वा एष पुरुषोऽन्नरसमयः तै. २.१
स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म बृ. ४.४.२५
स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु बृ. ४.४.२२
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता श्वे. ३.१९
सैषानंदस्य मीमांसा भवति तै. २.८

सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता तै. ३.६
सोऽकामयत बहु स्यां प्रजायेय स तपोऽतप्यत स तपस्तप्त्वा तै. २.६
सोऽयं मनुष्यलोकः पुत्रेणैव बृ. १.५.१६
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः गी. १८.४६
स्वप्नेन शारीरं बृ. ४.३.११
स्वमात्मानमपीतो भवति छां. ६.८.१
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम गी. १०.१५
हिरण्यगर्भं जनयामास पूर्वं श्वे. ३.४
हिरण्यगर्भं पश्यत जायमानम्

## संक्षेपस्पष्टीकरणम् ।

ईश.—ईशावास्योपनिषत् ।
ऋ.—ऋग्वेदः ।
ऐ.—ऐतरेयोपनिषत् ।
ऐ. आ.—ऐतरेयारण्यकम् ।
कठ.—कठोपनिषत् ।
के., केन.—केनोपनिषत् ।
कौ., कौ. ब्रा. कौषीतकिब्राह्मणोपनिषत् ।
गी.—भगवद्गीता ।
छां.—छांदोग्योपनिषत् ।
जावा.—जाबालोपनिषत् ।
तै.—तैत्तिरीयोपनिषत् ।
तै. ब्रा.—तैत्तिरीयब्राह्मणम् ।
नारा.—नारायणोपनिषत् ।
प्र. प्रश्न.—प्रश्नोपनिषत् ।
बृ.—बृहदारण्यकोपनिषत् ।
ब्रह्मबिंदु.—ब्रह्मबिंदूपनिषत् ।
मनु.—मनुस्मृतिः ।
मभा.—महाभारतम् ।
मां. का.—मांडूक्यकारिकाः ।
मुं.—मुंडकोपनिषत् ।
श. ब्रा.—शतपथब्राह्मणम् ।
श्वे.—श्वेताश्वतरोपनिषत् ।



# संस्कृतग्रंथाः ।

अद्वैतसिद्धिः मधुसूदनसरस्वतीप्रणीता गौडब्रह्मानंदीव्याख्यासहिता रू. १०

अष्टोत्तरशतोपनिषदः ईश-केन-कठ-प्रश्न-मुंडक-मांडूक्य-तैत्तिरीय-ऐतरेय-छांदोग्य-बृहदारण्यक--श्वेताश्वतर-कैवल्य--जाबाल-नारायण-कौषीतकि-मैत्रायणी-नारदपरिव्राजकादीनां अष्टोत्तरशतोपनिषदां संग्रहः । रू. २-८-०

उपदेशसाहस्री श्रीमच्छंकराचार्यप्रणीता रामतीर्थविरचितव्याख्यायुता गद्यपद्यभागद्वयात्मका । मूल्यं रू. १-८-०

ऐतरेयब्राह्मणं सायणाचार्यविरचितभाष्यसमेतम् । रू. ११

गीतासंग्रहः भगवद्गीता-रामगीता-गणेशगीता-शिवगीता-देवीगीता-कपिलगीता-अष्टावक्रगीता-अवधूतगीता-हंसगीता-यमगीता-पांडवगीता-सूर्यगीता-ब्रह्मगीता-इत्येतास्त्रयोदशगीताः । रू. ३-१२-०

[ *Note*-Purchasers of any of our books can get the Gitasangraha at half the price i. e. for *Re. 1-14-0.* only ].

तत्त्वप्रकाशिका चित्सुखविरचिता । रू. ३

तैत्तिरीयब्राह्मणं सायणाचार्यविरचितभाष्यसमेतम् । रू. १५

तैत्तिरीयसंहिता सायणाचार्यविरचितभाष्यसमेता । रू. ५०

ब्रह्मसूत्रशांकरभाष्यं भामती-कल्पतरु-परिमल-व्याख्यात्रययुतं टिप्पणाद्युपस्कृतम् । रू. १०

ब्रह्मसूत्रशांकरभाष्यं २ रूप्यकौ ।

भगवद्गीता श्रीशंकराचार्यविरचितभाष्ययुता । रू. १-८-०

भागवतम् मूलमात्रम् । रू. १-८-०

योगवासिष्ठं वासिष्ठमहारामायणतात्पर्यप्रकाशव्याख्यायुतं भागद्वयात्मकम् । रू. १०-८-०

वाल्मीकिरामायणम् तिलकव्याख्यायुतम् । रू. ७-८-०

वाल्मीकिरामायणं मूलमात्रम् । रू. ३-८-०

शंकराचार्यविरचितभाष्ययुताः दशोपनिषदः । रू. ५

श्रीशंकरदिग्विजयः विद्यारण्यकृतः । रू. ६

# English Books.

**ARYAVARTIC HOME AND ARCTIC COLONIES.** By Mr. N. B. Pavagee. In this book, the author after fully examining all the present theories about the cradle of the Aryan race ( including Mr. B. G. Tilak's Arctic theory ), comes to the conclusion that the land of the Saptasindhus i. e. the Seven rivers, was the home of the Aryas whence they had migrated to the Arctic regions for colonisation. Price Rs. 3-8-0.

**ASPECTS OF THE VEDANTA** By various writers 12As.

**BRAHMA KNOWLEDGE.** An outline of the philosophy of the Vedanta as set forth by the Upanishads and by Shankara. By L. D. Barnett, M. A. Rs. 2.

**GERMANY AND THE NEXT WAR.** By General F. Von Bernhardi. Rs. 2.

**GERMANY IN THE 19TH CENTURY.** An exhaustive work showing the part played by Germany in the development of modern civilisation. Contents-The Political History, the Intellectual and Literary History, the Economic History, the History of education. the History of Theology, the History of Philosophy, and the History of Music. Rs. 6.

**NATIONALITY AND EMPIRE.** A running but scholarly study of current Indian political problems. By Babu Bipin Chandra Pal. Rs. 4.

**ORION** or Researches into the Antiquity of the Vedas. By Lokamanya Bal Gangadhar Tilak, B. A., LL. B. Only a few copies available. Rs. 2-8-0.

**SELF-GOVERNMENT IN INDIA:** Vedic & post-Vedic. A very elaborate essay on the history of selfgoverning institutions obtaining in India from the remote past. By Mr. N. B. Pavagee Rs. 3–8.

**SHRISHANKARACHARYA:** a sketch of his life & times. By C. N. K. Aiyar M. A. 12 As

**THE ELEMENTS OF METAPHYSICS.** By Prof. Paul Deussen of the Keil University. Rs. 6.

**VEDIC FATHERS OF GEOLOGY.** An essay on the Vedic discoveries in Geology. By Mr. N. B. Pavgee. Re. 1–8.

**ASHTEKAR & CO. POONA CITY, INDIA.**

